( अथ स्थापना )

नीचे लिखे श्लोक और तीन मन्त्र पढ़कर यन्त्र की स्थापना करे।

परमेष्ठिन् जगत्त्राण करणे मङ्गलोत्तम ।
शरणा इह तिष्ठतमेसन्निहितोऽस्तुपावनाः ॥

ॐ ह्रीं अर्हन् असिआउसा मंगलोत्तमशरणभूता अत्र अवतरावतर संवौषट् आह्वानन। ॐ ह्रीं अर्हन् असिआउसा मगलोत्तम शरणभूता तिष्ठ तिष्ठ ठः ठ स्थापनम् ॥ ह्रीं अर्हन् असिआउसा मगलोत्तमशरणभूता अत्र ममसन्निहितो भव २ वट् सन्निधापनम् ॥

पंकेरुहायातपरागपुंजसौगन्ध्यमद्भिः सलिलैः पवित्रैः ।
अर्हत्पदाभापित मगलादीन् प्रत्यूहनाशार्थ मह यजामि ॥

ॐ ह्रीं मंगलोत्तम शरणभूतेभ्य पंचपरमेष्ठिभ्यो जलं निर्वपा मीतिस्वाहा।

काश्मीरकर्पूरकृतद्रवेण, ससारतापापहृतौयुतेन ।
अर्हत्पदाभापित मगलादीन् प्रत्यूहनाशार्थ मह यजामि ॥

ॐ ह्रीं मगलोत्तम शरणभूतेभ्य पंचपरमेष्ठिभ्यो सुगधं निर्वपामीति स्वाहा ॥

शाल्यक्षतैरक्षतमूर्तिमद्भिरब्जादिवासेन सुगन्धिमद्भिः
अर्हत्पदाभापित मगलादीन् प्रत्यूहनाशार्थमहं यजामि ॥

ॐ ह्रीं मङ्गलोत्तम शरणभूतेभ्य पंचपरमेष्ठिभ्यः अक्षतं निर्वपामीति स्वाहा ॥

कदम्बजात्यादिभवैः सुरद्रुमैर्जातैर्मतोजास्त्रिपाशदक्षैः ।
अर्हत्पदाभाषितमंगलादीन् प्रत्यूहनाशार्थमहं यजामि ॥
ॐ ह्रीं मंगलोत्तम शरणभूतेभ्यः पंचपरमेष्ठिभ्यो पुष्पम् निर्वपामीति स्वाहा ॥

पीयूषपिण्डश्चशशांककान्ति-
स्पर्धाद्भिरिष्टैर्नयनप्रियैश्च ।
अर्हत्पदाभाषित मंगलादीन्-
प्रत्यूहनाशार्थ मह यजामि ॥
ॐ ह्रीं मंगलोत्तम शरणभूतेभ्य पंचपरमेष्ठिभ्यो नैवेद्य निर्वपामीति स्वाहा ॥

ध्वस्तांधकारप्रसरैः सुदीपैर्घृ तोद्भवैरत्नविनिर्मितैर्वा ।
अर्हत्पदाभाषित मंगलादीन् प्रत्यूहनाशार्थ मह यजामि ॥
ॐ ह्रीं मंगलोत्तम शरणभूतेभ्य पंचपरमेष्ठिभ्यो दीपं निर्वपामीति स्वाहा ॥

स्वकीय धूपेन नभो रकाश, व्यपद्धिरुद्यैश्च सुगन्धधूपैः ।
अर्हत्पदाभाषित मंगलादीन प्रत्यूहनाशार्थमह यजामि ॥
ॐ ह्रीं मंगलोत्तम शरणभूतेभ्यो पंचपरमेष्ठिभ्यो धूपं निर्वपामीति स्वाहा ।

नारंगपूगादिफलैरनर्घ्यै-
र्हृन्मानसादिप्रियतर्पकैश्च ॥
अर्हत्पदाभाषित मंगलादीन्,
प्रत्यूहनाशार्थमह यजामि ॥
ॐ ह्रीं मंगलोत्तम शरणभूतेभ्य पंचपरमेष्ठिभ्यो फलं निर्वपामीति स्वाहा ।

श्रंभश्चंदननंदनाक्षततरूद्भूतैर्निवेद्यैर्वरैः ।
दीपैर्धूपफलोत्तमैः समुदितैरेभिः सुवर्णस्थितैः ॥

अर्हत्सिद्ध सुसूरिपाठकमुनीन्,
लोकोत्तमान्मंगलान् ।
सत्पूजोयनहृत्तये शुभकृतः,
सेव्येशरण्यानहम् ॥

ॐ ह्रीं मंगलोत्तमशरणभूतेभ्य पंचपरमेष्ठिभ्यो अर्घ्यं निर्वपामीति स्वाहा ॥

---

## अथ प्रत्येक पूजनम् ।

कल्याणपञ्चककृतोदयमाप्तमीश
मर्हंतमच्युतचतुष्टयमासुरांगम् ।
स्याद्वादवागमृतसिन्धुशशांककोटि
मर्चे जलादिभिरनंतगुणालयस्थम् ॥

ॐ ह्रीं अनन्तचतुष्टयसमवशरणादिलक्ष्मीविभ्रते अर्हत्परमेष्ठिने अर्घं निर्वपामीति स्वाहा ॥

कर्माष्टकेन्धन चयं बहुतमपाशु हुत्वा ।
सद्ध्यानवह्निविसरे स्वयमात्मवन्तम् ॥
निश्रेयसामृतसरस्यथ सन्निनाय ।
संसिद्ध मुच्च पदद परिपूजयामि ॥

ॐ ह्रीं अष्टकर्मकाष्ठगणभस्मीकृते सिद्धपरमेष्ठिने अर्घं निर्वपामीति स्वाहा ॥

स्वाचारपंचकमपि स्वयमाचरंति,
ह्याचारयंति भविकान् निज शुद्धभावः ॥
तानर्चयामिविविधैः सलिलादिभिश्च ॥
मत्यूहनाशनविधौ निपुणान्पवित्रैः ॥

ॐ ह्रीं पंचाचारपरायणाय आचार्यपरमेष्ठिनेऽर्घं निर्वपामीति स्वाहा

अगांगवाह्यपरिपाठन लालशाना ।
मष्टांगज्ञानपरिशीलनभाविनानाम् ॥
पादारविन्द युगल खलुपाठकानां ।
शुद्धैर्जलादिवसुभिः परिपूजयामि ॥

ॐ ह्रीं द्वादशांग पठनपाठनोद्यताय उपाध्याय परमेष्ठिनेऽर्घं निर्वपामीति स्वाहा ॥

आराधनासुखविलासमहेश्वराणां ।
सद्धर्मलक्षणमयात्मविकस्वराणां ॥
स्तोतुगुणान् गिरिवनादिनिवासिनां वै ।
एषोऽध्यतचरणपीठमुवनमामि ॥

ॐ ह्रीं त्रयोदशप्रकार चारित्राराधकसाधुपरमेष्ठिने अर्घं निर्वपामीति स्वाहा ॥

अर्हन्मंगलमर्चामि जगन्मंगलदायकम् ।
मारब्धकर्मविघ्नौघमलयायपयोमुखम् ॥

ॐ ह्रीं अर्हन्मंगलाय अर्घं निर्वपामीति स्वाहा ॥

चिदानन्दलसद्वीचि मालिन गुणशालिनम्।
सिद्धमंगलमर्चेह सलिलादिभिरुज्वलैः ॥

ॐ ह्रीं सिद्धमंगलाय अर्घं निर्वपामीति स्वाहा ॥

बुद्धिक्रियारसतपोविक्रियौषधिमुख्यकाः।
ऋद्धयोऽप नमोऽन्ति साधुमंगलमर्चये।

ॐ ह्रीं साधुमंगलाय अर्घं निर्वपामीति स्वाहा ॥

लोकालोक स्वरूप च प्रज्ञप्त धर्म मंगलम्।
अर्चेवादित्रनिर्घोषगीतनृत्यैः वनादिभिः॥

ॐ ह्रीं केवल प्रज्ञप्तधर्ममंगलाय अर्घं निर्वपामीति स्वाहा ॥

लोकोत्तमोऽर्हन् जगतां भवबाधाविनाशकः।
अर्च्यतेऽर्घेण सपर्या कुकर्मगणहानये॥

ॐ ह्रीं अर्हं लोकोत्तमार्घ्यं निर्वपामीति स्वाहा॥

विश्वाग्रशिखर स्थायी सिद्धालोकोत्तमाश्रया।
महते महसामद्चिदानन्द मुमेदुरः॥

ॐ ह्रीं सिद्धलोकोत्तमार्घं निर्वपामीति स्वाहा॥

रागद्वेषपरित्यागी साम्य भावावबोधकः ।
साधुलोकोत्तमार्घेण पूज्यते सलिलाक्षतैः ॥

ॐ ह्रीं साधुलोकोत्तमाय अर्घं निर्वपामीति स्वाहा ॥

उत्तमक्षमया भास्वान् सधर्मो विष्टपोत्तमः ।
अनन्तसुखसंस्थाने यज्यतेऽम्भोऽक्षतादिभिः ।

ॐ ह्रीं केवलिप्रज्ञप्तधर्मलोकोत्तमाय अर्घं निर्वपामीति स्वाहा ॥

सदार्हन् शरणं मन्ये नान्यथा शरणं मम ।
इति भाव विशुद्ध्यर्थमर्हयामि जलादिभिः ॥

ॐ ह्रीं अर्हच्छरणाय अर्घ्यं निर्वपामीति स्वाहा ॥

व्रजामि सिद्धशरणं परावर्तनपंचक ।
भित्वा स्वसुखसंदोहसंपन्नमिति पूजये ॥

ॐ ह्रीं सिद्धशरणाय अर्घं निर्वपामीति स्वाहा ॥

आश्रये साधुशरणं सिद्धान्त प्रतिपादने ।
न्यत्क्कृताज्ञानतिमिरमिति शुद्ध्यायजामितं ॥

ॐ ह्रीं साधुशरणाय अर्घं निर्वपामीति स्वाहा ।

धर्म एव सदाबन्धुः स एव शरणं मम ।
इह वा यत्र संसारे इति तं पूजये धुना ॥

ॐ ह्रीं धर्मशरणाय अर्घं निर्वपामीति स्वाहा ।

संसार दुःखहनने निपुण जनानां ।
नाद्यन्तचक्रमिति सप्तदशप्रमाणम् ॥
सपूजये विविधभक्तिभरावनम्रः ।
शांतिप्रदं भुवनमुख्यपदार्थ सार्थैः ॥
ॐ ह्रीं अर्हदादि सप्तदशाङ्गेभ्य महार्घं निर्वपामीति स्वाहा॥

( पुष्प चढ़ाकर १० बार णमोकार मन्त्र पढ़े )

---

## अथ जयमाला ।

विघ्नप्रणाशनविधौ सुरमर्त्यनाथा,
अग्रेसर जिन वदन्ति भवन्तमिष्टम् ॥
अनाद्यनन्त युगवर्तिनमत्र कार्ये,
गार्हस्थ्यधर्मविहितेऽहमपि स्मरामि ॥
गणानां मुनीनामधीशत्व तस्ते,
गणेशाख्यया ये भवन्त स्तुवन्ति ॥
सदा विघ्नसन्दोहशांतिर्जनानां,
करे संलुठत्यायतश्रेयसानाम् ॥
कलेः प्रभावात्कलुषाशयस्य,
जनेषु मिथ्यामदवासितेषु ॥

प्रवर्तितोऽन्यो गणराजनाम्ना,
लंबोदरो दंतिमुखो गणेशः ॥
रुद्रेन कामज्ज्वलितेन गौर्या,
विनोदभारान्मलमुत्क्षिपित्वा ॥
कृत्वापुराणन्विति वाचयित्वा
सम्मगल त कथमुद्गिरन्ति ॥
यतस्त्वमेवासि विनायको मे,
दृष्टेष्टयोगानवरुद्धभावः ॥
त्वन्नाममात्रेण पराभवंति,
विघ्नारयस्तर्हि किमत्रचित्रम् ॥

जय जय जिनराज त्वद् गुणान्कोव्यनक्ति,
यदिसुरगुरुरिन्द्र कोटिवर्षं प्रमाण ॥
यदितुमभिलपेद्वा पारमाप्नोति नो चेत्,
कतिथ इह मनुष्यः स्वल्पबुध्या समेतः ॥

ॐ ह्रीं अर्हदादि सप्तदश मंत्रेभ्योऽर्घं निर्वपामीति स्वाहा ॥

श्रिय बुद्धिमनाकुल्य धर्मप्रीति विवर्धन,
गृहि धर्मे स्थितिर्भूयात् श्रेयसे मेऽदिशत्वरम् ॥
इत्याशीर्वाद ।

यहां का नवमह अर्घ्य, लगी चिट पर पढ़िये ।

# नवदेव पूजा ।

(अथ नवग्रह अर्घ्य)

सूर्यः शौर्यगुणं शशी कुशलतां सन्मंगलं मंगलो ।
बुद्धिं सत्त्वगुणां बुधो विंतरतात्जीवः शुभोऽनीघनम् ॥
शुक्रः शुक्लतर यशोऽतिविपुलं मंदोप्यमंदश्चिरम् ।
राहुर्बाहुबलं महाप्र्यमहितः केतुर्महीकेतुताम् ॥

ॐ ह्रीं आदित्यादिनवग्रहदेवा सर्वेपि सन्तु प्रभूतीना शान्ति कुरुत २ स्वाहा ।

दत्तीर्था इव गाहनागुरुलघुपञ्चस्तवाघद्दुरम् ॥
ममानामि यजामि सन्ततमविध्यायामि गायामि तम् ।
सरनौमि प्रणमामि यामि शरणं सिद्धं विशुद्धं मष्टम् ।

ॐ ह्रीं श्रीसकलकर्मविमुक्ताय परमब्रह्मपरमेश्वराय सिद्धपरमेष्ठिनेऽर्घ्यं निर्वपामीति स्वाहा ॥

आचारवत्वादिगुणाष्टकार्य ।
दशप्रकारस्थितकल्पदीपम् ॥
द्विषट्तपःसद्द्दमाधपदधि- ।
राजश्यर्के सूरिमह नमामः ॥

ॐ ह्रीं षट्त्रिंशद्गुणान्वितश्रीमदाचार्यपरमेष्ठिनेऽर्घ्यं नि...

एकदशाङ्गकचतुर्दशपूर्वसर्व- ।
सम्यक् श्रुते, पठनपाठनपाटवो य'
कारुण्य पुण्यसरिदुद्गमभुद्रचित्तः ।
त पाठक मुनिमुदारगुण नमाव,

ॐ ह्रीं पचविंशतिगुणसमन्वितश्रीमदुपाध्यायपरमे निर्वदामीति स्वाहा ।

अस्नानभूशयनलोचविचेलतैक ।
भक्तोदभक्तरदघर्षणशुद्धवृत्तम् ॥
पचवृत्तोद्धसमितोन्द्रियरोधषट्स- ।
दावश्यकोत्तमपर प्रणमामि साधु

ॐ ह्रीं अष्टाविंशतिगुणसमन्वितश्रीसाधुपरमेष्ठिने मीति स्वाहा ।

अर्हद्वचनप्रसूतं गणधररचित द्वादशाग विशाल
चित्र वह्वर्थयुक्त मुनिगणवृषभैर्धारित
मोक्षाग्रद्वारभूतं व्रतचरणफल ज्ञेयभावप्रदीप
भक्त्यानित्यप्रव दे श्रुतमहमखिल

ॐ ह्रीं श्रीजिनमुखोत्पन्नाये
मीति स्वाहा ।

धर्म, सर्वसुखाकरो हितकरो
धर्मेणैव समाप्यते शिव

धर्मान्नास्ति परस्सुहृद्भवभृतां धर्मस्य मूलं दया ।
धर्मे चित्तमहं दधे प्रतिदिनं हे धर्म ! मां पालय ।

ॐ ह्रीं अर्हन्मुखकमलसमुद्भूतस्याद्वादनयगर्भितद्वादशांगश्रुतज्ञानाय अर्घं निर्वपामीति स्वाहा ।

कृत्याकृत्रिमचारुचैत्यनिलयान्नित्यं त्रिलोकीगतान् ।
वन्दे भावनव्यन्तरद्युतिवरस्वर्गामरावासगान् ॥
सद्गन्धाक्षत पुष्पचारुचरुभिर्दीपैश्च धूपैः फलैः ।
नीराद्यैश्च यजे प्रणम्य शिरसा दुष्कर्मणां शान्तये ॥
ॐ ह्रीं त्रिलोकवर्तिश्रीजिनालयेभ्योऽर्घं निर्वपामीति स्वाहा ।

यावन्तिजिनचैत्यानि, विद्यन्ते भुवनत्रये ।
तावन्ति सततं भक्त्या, त्रिःपरीत्य नमाम्यहम् ॥

ॐ ह्रीं त्रिलोकवर्तिभ्य श्रीवीतरागप्रतिबिम्बेभ्योऽर्घं निर्वपामीति स्वाहा ।

---

## सिद्धपूजा ।

### स्थापना ( इन्द्रवज्रा )

सिद्धान् प्रसिद्धान् वसुकर्ममुक्तान् ।
त्रैलोक्यशीर्षे स्थितचिद्विलासान् ॥

एकादशाङ्गचतुर्दशपूर्वसर्व- ।
सम्यक् श्रुते पठनपाठनपाटवो यः
कारुण्य पुण्यसरिदुद्भसमुद्रचित्तः ।
तं पाठकं मुनिमुदारगुणं नमामि ॥

ॐ ह्रीं पंचविंशतिगुणसमन्वितश्रीमदुपाध्यायपरमेष्ठिनेऽर्घ निर्वपामीति स्वाहा ।

अस्नानभूशयनलोचविचलतैर- ।
भक्तोदमक्तरदघर्षणशुद्धवृत्तम् ॥
पचव्रतोद्भमितीन्द्रियरोधषट्स ।
दावश्यकोत्तमपरं प्रणमामि साधुम् ॥

ॐ ह्रीं अष्टाविंशतिगुणसमन्वितश्रीसाधुपरमेष्ठिनेऽर्घं निर्वपामीति स्वाहा ।

अर्हद्वक्त्रप्रसूतं गणधररचितं द्वादशांगं विशालम् ।
चित्रं बह्वर्थयुक्तं मुनिगणवृषभैर्धारितं बुद्धिमद्भिः ॥
मोक्षाग्रद्वारभूतं व्रतचरणफलं ज्ञेयभावप्रदीपम् ।
भक्त्यानित्यमथ दे श्रुतमहमखिलं सर्वलोकैकसारम् ॥

ॐ ह्रीं श्रीजिनमुखोत्पन्नायै भगवत्यै वाग्देव्यै अर्घं निर्वपामीति स्वाहा ।

धर्मः सर्वसुखाकरो हितकरो धर्मं बुधाश्चिन्वते ।
धर्मेणैव समाप्यते शिवसुखं धर्माय तस्मै नमः ॥

धर्मान्नास्ति परस्सुहृद्भवभृतां धर्मस्य मूलं दया ।
धर्मे चित्तमहं दधे प्रतिदिनं हे धर्म ! मां पालय ।

ॐ ह्रीं अर्हन्मुखारविन्दवीतरागप्रणीतशाश्वतधर्माय अर्घं निर्वपामीति स्वाहा ।

कृत्याकृत्रिमचारुचैत्यनिलयान्नित्यं त्रिलोकीगतान् ।
वन्देभावनव्यन्तरद्युतिवरस्वर्गामरावासगान् ॥
सद्गन्धाक्षत पुष्पचारुचरुभिर्दीपैश्च धूपैः फलैः ।
नीराद्यैश्च यजेप्रणम्यशिरसा दुष्कर्मणां शान्तये ॥

ॐ ह्रीं त्रिलोकवर्तिकृत्रिमाकृत्रिमजिनालयेभ्योऽर्घं निर्वपामीति स्वाहा ।

यावन्ति जिनचैत्यानि, विद्यन्ते भुवनत्रये ।
तावन्ति सततं भक्त्या, त्रिःपरीत्य नमाम्यहम् ॥

ॐ ह्रीं त्रिलोकवर्तिभ्यः श्रीवीतरागप्रतिबिम्बेभ्योऽर्घं निर्वपामीति स्वाहा ।

---

## सिद्धपूजा ।

### स्थापना ( इन्द्रवज्रा )

सिद्धान् प्रसिद्धान् वसुकर्ममुक्तान् ।
त्रैलोक्यशीर्षे स्थितचिद्विलासान्

सद्ध्यापये भावविशुद्धिदातृन् ।
सन्मङ्गलमाज्यसमृद्धयेऽहम् ॥१॥

ॐ ह्रीं वसुकर्मनाशकसिद्धसमूह ! अत्र अवतर अवतर संवौषट् । (इत्याह्वाननम्)

ॐ ह्रीं वसुकर्मनाशकसिद्धसमूह ! अत्र तिष्ठ तिष्ठ ठः ठः (इति स्थापनम्)

ॐ ह्रीं वसुकर्मनाशकसिद्धसमूह ! अत्र मम सन्निहितो भव भव वषट् (इति सन्निधापनम्)

ॐ ह्रीं नीरजसे नमः (भूमिशुद्धिः)
ॐ ह्रीं दर्पमथनाय नमः (जलम्)
ॐ ह्रीं शीलगन्धाय नमः (चन्दनम्)
ॐ ह्रीं अक्षताय नमः (अक्षतम्)
ॐ ह्रीं विमलाय नमः (पुष्पम्)
ॐ ह्रीं परमसिद्धाय नमः (नैवेद्यम्)
ॐ ह्रीं ज्ञानोद्योताय नमः (दीपम्)
ॐ ह्रीं श्रुतधूपाय नमः (धूपम्)
ॐ ह्रीं अभीष्टफलदाय नमः (फलम्)

(रथोद्धता)

अष्टकर्मगणनष्टकारकान्, अष्टकु दलितसुदष्टगायदान् ।
स्पष्टबोधपरिमीतविष्टपान्, अर्घतोऽघनशमाय पूजये ॥१॥

ॐ ह्रीं वसुकर्मरहितसिद्धेभ्योऽर्घ्यं निर्वपा ॥
इसके बाद बीच की कटनी में विराजमा

## श्रुतपूजा ।
( रथोद्धता )

द्वादशांगमखिलं श्रुतं मया, पाणिपीडनमहोत्सवेऽधुना ।
पूजनेन यदि धर्मसम्भवो, द्वैधयैव जगतां प्रसीदति ॥१॥

ॐ ह्रीं द्वादशांगश्रुताया ऽर्घ्यं निर्वपामीति स्वाहा ।

इसके बाद तीसरी ( ऊपर की ) कटनी में विराजमान —

---

## गुरु पूजा तथा धर्मचक्र पूजा ।
( रथोद्धता )

ऋद्धयो बलरसादि विक्रियो-, षध्यसक्षयमहानसादिकाः ।
यत्क्रमाम्बुरुहवासमाश्रिताः, तान्गुरूनभिमहामि वार्मुखैः ॥१॥

ॐ ह्रीं महर्द्धिधारकपरमर्षिभ्योऽर्घ्यं निर्वपामीति स्वाहा ।

अष्टमंगलमिदं पदाम्बुजे, भासते शतसुमंगलीपदम् ।
धर्मचक्रमभिपूजये वरं, कर्मचक्रपरिनाशनाय तम् ॥१॥

ॐ ह्रीं धर्मचक्रायार्घ्यं निर्वपामीति स्वाहा ॥१॥

इसके बाद अग्निकुण्ड में साथिये बनावे और ॐ लिखे और शुद्ध तथा शुष्क लकड़ियां (चन्दन सफेद, चन्दन लाल, ढाक की लकड़ियां, छीली हुई आक की लकड़ियां और कपूर) रक्खे और गार्हपत्य नाम की अग्नि प्रज्वलित करे और बाद में नीचे लिखे मंत्र से अर्घ प्रदान करे।

श्री तीर्थनाथपरिनिर्वृतिपूज्यकाले,
मागत्य वह्नि सुरपा मुकुटोल्लसद्भिः।
वह्निव्रजैर्जिनपदेहमुदारभक्त्या,
देहस्तदाग्निमहमर्चयितुं दधामि ॥१॥

ॐ ह्रीं चतुरस्रे तीर्थंकरकुण्डे गार्हपत्याग्नयेऽर्घ्यं निर्वपामीति स्वाहा।

## हवन विधि

पूजन के बाद यह क्रिया करनी चाहिये। हवनकुण्ड की रचना पूर्व में बताई जा चुकी है, उसके अनुसार तैयार कर लेना चाहिये। नीचे लिखे मंत्रों द्वारा ये कार्य गृहस्थाचार्य और करें।

सूत्र वेष्टन = ॐ ह्रीं पञ्चवर्णसूत्रेण त्रीन्वारान् वेष्टयामि स्वाहा। यह मंत्र बोलकर मंगल सूत्र एक दूसरी खूंटी से वेष्टित कर बांध दे।

इसके बाद गृहस्थाचार्य वर कन्या द्वारा पूजन करावें। इसी समय हवन कुण्ड के चारों ओर चार लघुकलश नीचे लिखा मंत्र पढ़कर स्थापित करें।

ॐ ह्रीं स्वस्तये चतुःकलशान् स्थापयामि स्वाहा

बाद में अग्निकुण्ड में अक्षत बिछाकर पुष्पों से अग्नि मंडल ॐ या स्वस्तिक बनाकर रक्खे। हवन की सब सामग्री को यथास्थान रखकर बाद में प्रासुक जल से तूल द्वारा भूमि का शोधन और सामग्री का शोधन नीचे लिखे मन्त्र द्वारा करे।

ॐ ह्रीं पवित्र तर जलेन शुद्धि करोमि स्वाहा। पीछे कुण्ड में समिधियां स्थापित कर दे और कपूर या डाभ के तूल से अग्नि संस्थापन मन्त्र को पढ़ कर अग्नि प्रज्वलित करे।

ॐ ॐ ॐ ॐ रं रं रं रं अग्नि संस्थापयामि स्वाहा।

अब आगे लिखे कुण्ड के पूजन को करना चाहिये।

श्री तीर्थनाथ परिनिर्वृति पूज्यकाले,
आगत्य वह्नि सुरपामुकुटाल्लसद्भिः।
वह्निव्रजैर्जिनपदेऽमुदारभक्त्या,
देहुस्तदाग्नि मरमर्चयितु दधामि ॥

ॐ ह्रीं प्रथमे चतुरस्रे तीर्थ कर कुण्डे गार्हपत्याग्नयेऽर्घ्यं निर्वपामीति स्वाहा।

गणाधिपाना शिवमाप्तिकालेऽ
ग्नीन्द्रोत्तमाङ्ग स्फुरदाग्निरेषः।
संस्थाप्य पूज्यः समयाहनीयो
विवाह शान्तौ विधिना हुतीश.

ॐ ह्रीं द्वितीये वृत्ते गणधर कुण्डे आहवनीयाग्नयेऽर्घ्यं निर्वपामीति स्वाहा।

श्रीदक्षिणाग्नि परकेवलि
स्वशरीर निर्वाणसुताग्निदेव
किरीट संस्फुर दसौ मयापि
संस्थाप्य पूजामि विवाह शान्त्यै ।

ॐ ह्रीं त्रिकोणे सामान्य केवलिकुण्डे दक्षिणाग्नयेऽर्घ्यं निर्वपामीति स्वाहा ।

इसके उपरान्त गृहस्थाचार्य निराकुलता से मन्त्रों का शुद्ध उच्चारण करते हुए वर और कन्या के हाथ से घृत मिश्रित हवन द्रव्य की आहुतियां हवन कुण्ड में दिलावे ।

---

## अथ पीठिका मंत्र ।

ॐ सत्यजाताय नमः ॥ १ ॥ ॐ अर्हज्जाताय नमः ॥२॥
ॐ परमजाताय नमः ॥३॥ ॐ अनुपमजाताय नमः ॥४
ॐ स्वप्रधानाय नमः ॥५॥ ॐ अचलाय नमः ॥६॥
ॐ अक्षयाय नमः ॥७॥ ॐ अव्याबाधाय नमः ॥८॥
ॐ अनन्तज्ञानाय नमः ॥९॥ ॐ अनन्तदर्शनाय नमः १०॥
ॐ अनन्तवीर्याय नमः ॥११॥ ॐ अनन्तसुखाय नमः ॥१२॥
ॐ नीरजसे नमः ॥१३॥ ॐ निर्मलाय नमः ॥१४॥
ॐ अच्छेद्याय नमः ॥१५॥ ॐ अभेद्याय नमः ॥१६॥
ॐ अजराय नमः ॥१७॥ ॐ अमराय नमः ॥१

ॐ अप्रमेयाय नमः ॥१९॥ ॐ अगर्भवासाय नमः ॥२०॥ ॐ अक्षोभाय नमः ॥२१॥ ॐ अविलीनाय नम' ॥२२॥ ॐ परमघनाय नमः ।२३। ॐ परमकाष्ठायोगरूपाय नम' ।२४। ॐ लोकाग्रवासिने नमोनम' ॥२५॥ ॐ परमसिद्धेभ्यो नमोनम ॥२६॥ ॐ अर्हत्सिद्धेभ्यो नमोनमः ॥२७॥ ॐ केवलिसिद्धेभ्यो नमोनमः ॥२८॥ ॐ अतकृत्सिद्धेभ्यो नमोनमः ॥ २९ ॥ ॐ परम्परासिद्धेभ्यो नमोनम. ॥३०॥ ॐ अनादिपरम्परा सिद्धेभ्यो नमोनमः ॥३१॥ ॐ अनाद्य नुपमसिद्धेभ्यो नमोनम. ॥३२॥ ॐ सम्यग्दृष्टे आसन्न-भव्यनिर्वाणपूजार्ह अग्नीन्द्राय स्वाहा ॥३३॥

( इस प्रकार ३३ आहुति देने के पश्चात् नीचे लिखा काव्य मन्त्र पढ़कर एक आहुति देवे और पुष्प ले अपने तथा सब पास बैठने वालों के ऊपर डाले )

सेवाफल षट्परमस्थान भवतु, अपमृत्युविनाशन भवतु, ~~समाधिमरण भवतु~~, स्वाहा ।

## अथ जातिमंत्र ।

ॐ सत्यजन्मन शरण प्रपद्ये ॥१॥ ॐ अर्हज्जन्मनः शरण प्रपद्ये ॥२॥ ॐ अर्हन्मातुः शरण प्रपद्ये ॥३॥ ॐ अर्हत्सुतस्य शरण प्रपद्ये ।४॥ ॐ अनादिगमनस्यशरण प्रपद्ये ॥५॥ ॐ अनुपजन्मन. शरण प्रपद्ये ॥ ६ ॥ रत्नत्रयस्य शरण प्रपद्ये ॥ ७ ॥ ॐ सम्यग्दृष्टे सम्यग्दृष्टे ज्ञानमूर्ते ज्ञानमूर्ते सरस्वति सरस्वति स्वाहा ॥ ८ ॥

(इस प्रकार [illegible] आहुति देने के पश्चात् नीचे लिखा आशीर्वाद-सूचक काम्यमंत्र पढ़ कर एक आहुति देवे ।)

सेवाफल षट्परमस्थान भवतु, अपमृत्युविनाशनं भवतु, समाधिमरणं भवतु स्वाहा ॥

## अथ निस्तारकमंत्र ।

ॐ सत्यजाताय स्वाहा ॥१॥ ॐ अर्हज्जाताय स्वाहा ॥ २ ॥ ॐ षट्कर्मणे स्वाहा ॥ ३ ॥ ॐ ग्रामपतये स्वाहा ॥४॥ ॐ अनादिश्रोत्रियाय स्वाहा ॥५॥ ॐ स्नातकाय स्वाहा ॥ ६ ॥ ॐ श्रावकाय स्वाहा ॥७॥ ॐ देवब्राह्मणाय स्वाहा ॥ ८ ॥ ॐ सुब्राह्मणाय स्वाहा ॥ ९ ॥ ॐ अनुपमाय स्वाहा ॥१०॥ ॐ सम्यग्दृष्टे सम्यग्दृष्टे निधिपते निधिपते वैश्रवण वैश्रवण स्वाहा ॥ ११ ॥

(इस प्रकार ११ आहुति देने के पश्चात् नीचे लिखा आशीर्वाद सूचक काम्यमंत्र पढ़ कर एक आहुति देवे)

सेवाफलं षट्परमस्थानं भवतु अपमृत्युविनाशनं भवतु, समाधिमरणं भवतु स्वाहा ।

## अथ ऋषिमंत्र ।

ॐ सत्यजाताय नमः ॥१॥ ॐ
ॐ निर्ग्रन्थाय नमः ॐ वीतरागाय

ॐ महाव्रताय नमः ॥५॥ ॐ त्रिगुप्ताय नमः ॥६॥ ॐ महायोगाय नमः ॥७॥ ॐ विविधयोगाय नमः ॥८॥ ॐ विविधर्द्धये नमः ॥९॥ ॐ अंगधराय नमः ॥१०॥ ॐ पूर्वधराय नमः ॥११॥ ॐ गणधराय नमः ॥१२॥ ॐ परमर्षिभ्यो नमो नमः ॥१३॥ ॐ अनुपमजाताय नमोनमः ॥१४॥ ॐ सम्यग्दृष्टे सम्यग्दृष्टे भूपते भूपते नगरपते नगरपते कालश्रमण कालश्रमण स्वाहा ॥१५॥

( इस प्रकार १५ आहुति देकर फिर नीचे लिखा आशीर्वाद सूचक काम्यमन्त्र पढकर एक आहुति देवे )

सेवाफलं षट्परमस्थानं भवतु, अपमृत्युविनाशनं भवतु, ~~समाधिमरणं भवतु,~~ स्वाहा ।

## अथ सुरेन्द्रमन्त्र ।

ॐ सत्यजाताय स्वाहा ॥१॥ ॐ अर्हज्जाताय स्वाहा ॥२॥ ॐ दिव्यजाताय स्वाहा ॥३॥ ॐ दिव्यार्चिजाताय स्वाहा ॥४॥ ॐ नेमिनाथाय स्वाहा ॥५॥ ॐ सौधर्माय स्वाहा ॥६॥ ॐ कल्पाधिपतये स्वाहा ॥७॥ ॐ अनुचराय स्वाहा ॥८॥ ॐ परम्परेंद्राय स्वाहा ॥९॥ ॐ अहमिन्द्राय स्वाहा ॥१०॥ ॐ परमार्हताय स्वाहा ॥११॥ ॐ अनुपमाय स्वाहा ॥१२॥ ॐ सम्यग्दृष्टे सम्यग्दृष्टे कल्पपते कल्पपते दिव्यमूर्ते दिव्यमूर्ते वज्रनामन् वज्रनामन् स्वाहा ॥१३॥

(इस प्रकार १३ मन्त्रों की आहुति देने के पश्चात् नीचे लिखा आशीर्वादसूचक काम्यमन्त्र पढ़कर एक आहुति देवे ।

सेवाफल षट्परमस्थान भवतु, अपमृत्युविनाशन भवतु, समाधिमरणं भवतु, स्वाहा ।

## परमराजादिमन्त्र ।

ॐ सत्यजाताय स्वाहा ॥१॥ ॐ अर्हज्जाताय स्वाहा ॥२॥ ॐ अनुपमेंद्राय स्वाहा ॥३॥ ॐ विजयार्च्यजाताय स्वाहा ॥४॥ ॐ नेमिनाथाय स्वाहा ॥५॥ ॐ परमजाताय स्वाहा ॥६॥ ॐ परमार्हताय स्वाहा ॥७॥ ॐ अनुपमाय स्वाहा ॥८॥ ॐ सम्यग्दृष्टे सम्यग्दृष्टे उग्रतेजः उग्रतेजः दिशांजन दिशांजन नेमिविजय नेमिविजय स्वाहा ॥९॥

(इस प्रकार ९ मंत्रों की आहुति देने के पश्चात् नीचे लिखा आशीर्वादसूचक काम्यमन्त्र पढ़ कर एक आहुति देवे )

सेवाफल षट्परमस्थान भवतु, अपमृत्युविनाशन भवतु, समाधिमरणं भवतु, स्वाहा ।

## परमेष्ठिमन्त्र

ॐ सत्यजाताय नमः ॥१॥ ॐ अर्हज्जाताय ॥२॥ ॐ परमजाताय

ॐ महाव्रताय नमः ॥५॥ ॐ त्रिगुप्ताय नमः ॥६॥ ॐ महायोगाय नमः ॥७॥ ॐ विविधयोगाय नमः ॥८॥ ॐ विविधर्द्धये नमः ॥९॥ ॐ अंगधराय नमः ॥१०॥ ॐ पूर्वधराय नमः ॥११॥ ॐ गणधराय नमः ॥१२॥ ॐ परमर्षिभ्यो नमो नमः ॥१३॥ ॐ अनुपमजाताय नमोनमः ॥१४॥ ॐ सम्यग्दृष्टे सम्यग्दृष्टे भूपते भूपते नगरपते नगरपते कालश्रमण कालश्रमण स्वाहा ॥१५॥

(इस प्रकार १५ आहुति देकर फिर नीचे लिखा आशीर्वाद सूचक काम्यमन्त्र पढकर एक आहुति देवे)

सेवाफलं षट्परमस्थानं भवतु, अपमृत्युविनाशनं भवतु, ~~समाधिमरणं भवतु,~~ स्वाहा।

## अथ सुरेन्द्रमन्त्र।

ॐ सत्यजाताय स्वाहा ॥१॥ ॐ अर्हज्जाताय स्वाहा ॥२॥ ॐ दिव्यजाताय स्वाहा ॥३॥ ॐ दिव्यार्चिजाताय स्वाहा ॥४॥ ॐ नेमिनाथाय स्वाहा ॥५॥ ॐ सौधर्माय स्वाहा ॥६॥ ॐ कल्पाधिपतये स्वाहा ॥७॥ ॐ अनुचराय स्वाहा ॥८॥ ॐ परपरेंद्राय स्वाहा ॥९॥ ॐ अहमिन्द्राय स्वाहा ॥१०॥ ॐ परमार्हताय स्वाहा ॥११॥ ॐ अनुपमाय स्वाहा ॥१२॥ ॐ सम्यग्दृष्टे

दिव्यमूर्ते दिव्यमूर्ते वज्रनामन् व ॥

(इस प्रकार १३ मन्त्रों की आहुति देने के पश्चात् नीचे लिखा आशीर्वादसूचक काम्यमंत्र पढ़कर एक आहुति देवें।

सेवाफल षट्परमस्थानं भवतु, अपमृत्युविनाशनं भवतु, समाधिमरणं भवतु, स्वाहा।

## परमराजादिमन्त्र।

ॐ सत्यजाताय स्वाहा ॥१॥ ॐ अर्हज्जाताय स्वाहा ॥२॥ ॐ अनुपमेंद्राय स्वाहा ॥३॥ ॐ विजयार्च्यजाताय स्वाहा ॥४॥ ॐ नेमिनाथाय स्वाहा ॥५॥ ॐ परमजाताय स्वाहा ॥६॥ ॐ परमार्हताय स्वाहा ॥७॥ ॐ अनुपमाय स्वाहा ॥८॥ ॐ सम्यग्दृष्टे सम्यग्दृष्टे उग्रतेजः उग्रतेजः दिशांजन दिशांजन नेमिविजय नेमिविजय स्वाहा ॥९॥

(इस प्रकार ९ मंत्रों की आहुति देने के पश्चात् नीचे लिखा आशीर्वादसूचक काम्यमन्त्र पढ़कर एक आहुति देवे)

सेवाफल षट्परमस्थानं भवतु, अपमृत्युविनाशनं भवतु, समाधिमरणं भवतु, स्वाहा।

## परमेष्ठिमन्त्र

ॐ सत्यजाताय नमः ॥१॥ ॐ अर्हज्जाताय नमः ॐ परमजाताय नमः ॥३॥ ॐ परमार्हतायनमः ॥४॥

ॐ परमरूपाय नमः ॥५॥ ॐ परमतेजसे नमः ॥६॥
ॐ परमगुणाय नमः ॥७॥ ॐ परमस्थानाय नमः ॥८॥
ॐ परमयोगिने नमः ॥९॥ ॐ परमभाग्याय नमः ॥१०॥
ॐ परमर्द्धये नमः ॥११॥ ॐ परमप्रसादाय नमः ॥१२॥
ॐ परमकांक्षिताय नमः ॥१३॥ ॐ परमविजयाय नमः ॥१४॥ ॐ परमविज्ञानाय नमः ॥१५॥ ॐ परमदर्शनाय नमः ॥१६॥ ॐ परमवीर्याय नमः ॥१७॥ ॐ परमसुखाय नमः ॥१८॥ ॐ परमसर्वज्ञाय नमः ॥१९॥ ॐ अर्हते नमः ॥२०॥ ॐ परमेष्ठिने नमः ॥२१॥ ॐ परमनेत्रे नमो नमः ॥२२॥ ॐ सम्यग्दृष्टे सम्यग्दृष्टे त्रैलोक्यविजय त्रैलोक्य विजय धर्ममूर्त्ते धर्ममूर्त्ते धर्मनेमे धर्मनेमे स्वाहा ॥२३॥

( इस प्रकार २३ मंत्रों को आहुति देने के पश्चात् नीचे लिखा आशीर्वादसूचक काम्यमन्त्र पढ़ कर एक आहुति देवे )

सेवाफलं षट्परमस्थानं भवतु, अपमृत्युविनाशनं भवतु, ~~समाधिमरणं भवतु~~ स्वाहा ॥

धूपैः संधूपितानेक, कर्मभिर्धूपदायिनः ।
अर्चयामि जनाधीश, सदागमगुरून् गुरून् ॥१॥

ॐ ह्रीं श्रीमज्जिनश्रुतगुरुभ्यो नमः धूपम् ।

सुरभीकृतदिग्व्रातै र्धूपधूमैर्जगत्प्रियैः ।
यजामि जिनसिद्धेश, सूर्युपाध्यायसद्गुरून् ॥२॥

ॐ ह्रीं पंचपरमेष्ठिभ्यो नमः धूपम् ।

मृद्वग्निसगमसमुज्वलतोरुधूमैः ।
कृष्णागुरुप्रमृतिसुन्दरवस्तुधूपैः ॥
भीत्यानटद्भिरिव तारुडवनृत्यमुच्चैः
कर्मारिदारुदहनं जिनमर्चयामि ॥३॥

ॐ ह्रीं अर्हत्परमेष्ठिने धूपम् ।

गोत्रक्षयसंभवसत्तसमवं, सद्गुरुलघुतारूपपरं ।
सर्गमसर्गमपीतमनुक्षण, मुञ्झितसर्गासर्गमरम् ॥
कृष्णागुरुधूपैः सुरभितभूपैधूमैः स्पष्टहरिद्रूपै—
र्यायजमःसिद्ध सर्वविशुद्ध बुद्धमरुद्धं गुणरुद्धम् ॥४॥

ॐ ह्रीं सिद्धिपरमेष्ठिने धूपम् ।

हुत्वास्वमप्यगुरुभिः सुरभीकृताशे–,
रग्नौ समुच्छलित संमृतचन्द्रधूपैः ।
सधूपयामि चरणं शरणं शरण्य ॥
पुण्यं भवभ्रमहरं गणिना मुनीनाम् ॥५॥

ॐ ह्रीं आचार्यपरमेष्ठिने धूपम् ।

सधूपिताखिलदिशोधनशङ्कयेह.
बर्हिव्रज स्वनटनादिव नर्तयद्भिः ।
मृद्वग्निसंगसितताग्रुरुधूपधूमैः,
श्रीपाठक क्रमयुग यजमामहामः ॥६॥

ॐ ह्रीं उपाध्यायपरमेष्ठिने धूपम् ।

स्वमग्नौ विनिक्षिप्य दांगध्यत्रयम्,
दशाशास्यमुच्चैं करोति त्रिसध्यम् ॥
सदुद्दामकृष्णागुरुद्रव्यधूपे ।
यजेसाधुसधुनरद्रव्यक्तरूपे. ॥७॥

ॐ ह्रीं साधुपरमेष्ठिने धूपम् ।

धूपैः संधूपितानककर्मभिर्धूपदायिनः ।
वृषभादिजिनाधीशान्, वर्द्धमानान्तकान्यजे ॥८॥

ॐ ह्रीं वृषभादिवीरान्तचतुर्विंशति जिनेभ्यो धूपम् ।

उपर्युक्त विधि से हवन करने के पश्चात् ।

## ग्रन्थिबंधन ( गठजोड़ा )

इसका अर्थ है कि वर और कन्या का आजन्म पर्य्यन्त लौकिक, धार्मिक और गार्हस्थिक सम्बंधन पूर्वक रहना । इसलिये इस कार्य को देव-गुरु शास्त्र, अग्नि और समस्त पंच, स्त्री, पुरुष समाज के समक्ष नीचे लिखा श्लोक पढ़कर करना चाहिये ।

अस्मिन्जन्म येषवधोद्वयोर्वै,
कामे धर्मे वा गृहस्थत्वमाजि ।
योगो जातःपंचदेवाग्नि साक्षी
जायापत्योरंचलग्रंथिबन्धात् ।

नोट—कन्या की ओढ़नी या साड़ी का सीधा पल्ला और वर का दुपट्टा ( चीटली ) लेकर कन्या के पल्ले में एक सुपारी

और अक्षत व चादी रुखकर सवासिनी या अन्य किसी सौभाग्यवती स्त्री द्वारा एक दूसरे से गांठ बांध देनी चाहिये।

## हथलेवा

गृहस्थाचार्य अथवा कन्या का पिता सौभाग्यवती स्त्रियों द्वारा संस्कारित हल्दी से कन्या का बांया हाथ और वर का दाहिना हाथ लेपन करे और गृहस्थाचार्य कन्या का हाथ नीचे और वर का हाथ ऊपर रख दोनों के हाथ मिलावे अर्थात् हथलेवा जोड़े। पश्चात् कन्या का पिता अपनी शक्ति के अनुसार दहेज देवे और हथलेवा छुड़ा दिया जाव।

## फेरे या सप्तपदी

गठजोड़ा और हथलेवा होने के पश्चात् सप्तपरमस्थान की प्राप्ति के लिये कन्या को आगे और वर को पीछे कर, उस संस्कार वेदी के चारों ओर छह फेरे दिलाने चाहियें पीछे छठे फेरे के समाप्त होने पर कन्या और वर को अपने स्थान पर खड़ा कर देना चाहिये। अब आगे बताई हुई वर और कन्या की ओर से प्रतिज्ञाएँ गृहस्थाचार्य को खुलासा कर बता देनी चाहिये। इन्हें सुन, समझ कर वर और कन्या परस्पर में प्रतिज्ञाबद्ध हों।

# घर की तरफ से सात प्रतिज्ञाएँ ।

१ मम कुटुम्बजनानां यथायोग्य विनयशुश्रूषा करणीया ।

अर्थात् मेरे कुटुम्बियों की यथायोग्य सेवा, विनय, आदर सत्कार करना ।

२ ममाज्ञा न लोपनीया ।

अर्थात् मेरी आज्ञा को कभी भंग मत करना ।

३ कटु निष्ठुरवाक्यं न वक्तव्यम् ।

अर्थात् कड़ुवा और मर्मभेदी वचन मत बोलना ।

४ सत्पात्रादिजनेभ्यो गृहागतेभ्य आहारादिदाने कलुषित मनो न कार्यम् ।

अर्थात् सत्पात्रादि (मुनि, आर्यिका, श्रावक, श्राविका, आदि) के घर आने पर अपने मन को कलुषित मत करना ।

५ रात्रौ परगृहे न गंतव्यम् ।

अर्थात् रात को किसी दूसरे के घर पर मत जाना ।

६ बहुजनसकीर्णस्थान नगतव्यम् ।

अर्थात् जहां बहुत से आदमी जमा हो रहे हों ऐसे स्थान पर मत जाना ।

७ कुत्सितधर्मि मद्यपायिनां गृहे न गतव्यम् ।

अर्थात् जिनका आचरण और धर्म खराब है—ऐसे मद्यादि पीनेवाले और मिथ्याधर्म वालों के घर पर मत जाना ।

एतानि मदुक्तानि वचनानि यदि स्वीकारोषि तदा मम वामाङ्गी भव ।

अर्थात् यदि मेरी इन सातों शर्तों को तुम मंजूर करो तो मेरी पत्नी हो सकती हो ।

तब वधू कहे—

भगवतः कल्याणं करिष्यन्ति ।

अर्थात् ये समस्त प्रतिज्ञाएं मुझे मंजूर हैं ।

---

## कन्या की तरफ से सात प्रतिज्ञाएँ ।

१ अन्यस्त्रीभिः सार्द्धं क्रीडा न करणीया ।
अर्थात् अन्य स्त्रियों के साथ क्रीडा मत करना ।

२ वेश्यागृहे नगंतव्यम् ।
अर्थात् वेश्यादि खराब स्त्रियों के घर पर मत जाना ।

३ द्यूतक्रीडा न कार्या ।
अर्थात् जूवा मत खेलना ।

४ सदुद्योगाद् द्रव्यमुपार्ज्य वस्त्राभरणै, रक्षणीया ।

अर्थात् न्यायानुकूल उद्योग धन्धे से धन कमाकर वस्त्राभरण से मेरी रक्षा करना ।

५ धर्मस्थानगमने न वर्जनीया ।

अर्थात् मन्दिर तीर्थ सेवादि धर्म स्थान पर जाने से मुझे मत रोकना ।

६ गुप्त वार्ता न करणीया ।

अर्थात् कोई बात मुझसे गुप्त मत करना ।

७ मम गुप्त वार्ता अन्याग्रे न कथनीया ।

अर्थात् मेरी गुप्त बात दूसरे के आगे प्रकाशित मत करना ।
'भगवन्त, कल्याण करिष्यन्ति' इति वरो वदेत् ।

अर्थात् इसके उत्तर में वर कहे कि ये सातों प्रतिज्ञाएँ मुझे मन्जूर हैं ।

इसके आगे सातवां फेरा हो । इस फेरे में वर आगे और कन्या पीछे होना चाहिये । क्योंकि छटे फेरे तक कन्या की कन्या ही संज्ञा रहती है किन्तु सातवें फेरे में वह वधू हो जाती है । कारण यह है कि अब वह पति द्वारा प्रतिज्ञाबद्ध हो चुकी है और पति की अनुगामिनी बन रही है ।

इसके बाद वधू को वर के वाम अङ्ग पर कर देना चाहिये । और गृहस्थाचार्य दोनों के मस्तक ऊपर पत्र सेपन करे तथा

वर अपने हाथ से वधू को जगालो की माला और पुष्पमाल पहिनावे इसके बाद वर और वधू बैठें नहीं वेदी के सामने खड़े रहैं।

---

## ग्रहस्थाचार्य द्वारा उपदेश

हे दम्पति अब तुम पति पत्नी हुये हो। अब तुम्हारा याव जीवन को सम्बन्ध हुआ है। इसलिये तुम धर्म, अर्थ, काम को अविरोध रूप से सेवन करते हुए मोक्ष पुरुषार्थ को साधने के लिये प्रयत्नशील होना क्योंकि केवल धर्म, अर्थ और काम के सेवन से सन्मार्ग की प्राप्ति नहीं होती है। इससे इस प्रकार सुयोग के मिल जाने पर तुम्हें मोक्षमार्ग पर प्रवृत होना चाहिये।

तदन्तर गृहस्थाचार्य हाथ में कलश लेकर जल की धारा देता हुआ नीचे लिखा पुण्याहवाचन पढ़े।

ॐ पुण्याह पुण्याह। लोकोद्योतनकरा अतीतकाल-संजाता निर्वाणसागरमहासाधुविमलप्रभशुद्धाभश्रीधरसुद-त्तामलप्रभोद्धराग्निसन्मतिशिवकुसुमांजलिशिवगणोत्साहज्ञा-नेश्वर परमेश्वरविमलेश्वरयशोधरकृष्णमतिज्ञानमतिशुद्धमति-श्रीभद्रशांताश्चेति चतुर्विंशतिभूतपरमदेवाश्च वः प्रीयता प्रीयताम् ॥धारा ॥१॥

ॐ सम्प्रतिकालश्रेयस्करस्वर्गावतरणजन्माभिषेकपरि-

श्रीवृषभाजितशंभवाभिनंदनसुमतिपद्मप्रभसुपार्श्वचंद्रप्रभपुष्प-
दंतशीतलश्रेयोवासुपूज्यविमलानंतधर्मशांतिकुंथ्वरमल्लिमुनि-
सुव्रतनमिनेमिपार्श्ववर्द्धमानाश्चेति वर्तमानचतुर्विंशतिपरदेवाश्च
व. प्रीयतां प्रीयतां ॥ धारा ॥२॥

ॐ भविष्यत्कालाभ्युदयप्रभवा महापद्मसुरदेवसुप्रभस्वयंप्र-
भसर्वायुधजयदेवोदयदेवप्रभादेवोदङ्कदेवप्रश्नकीर्तिजयकीर्ति-
पूर्णबुद्धिनिःकषायविमलप्रभबहलनिर्मलचित्रगुप्तसमाधिगुप्त-
स्वयंभूकंदर्पजयनाथविमलनाथदिव्यवागनंतवीर्याश्चेति —
चतुर्विंशतिभविष्यत्परमदेवाश्च वः प्रीयतां प्रीयतां ॥धारा॥३॥

ॐ त्रिकालवर्तिपरमधर्माभ्युदयाः सीमंधरयुग्मंधरबाहु-
सुबाहुसंजातकस्वयंप्रभऋषभेश्वरानंतवीर्यसूरप्रभविशाल-
कीर्तिवज्रधरचंद्राननचंद्रबाहुभुजंगेश्वरनेमिप्रभवीरसेनमहाभद्र-
जयदेवाजितवीर्याश्चेति पंचविदेहक्षेत्रविहरमाणा विंशतिपरम-
देवाश्च व प्रीयतां प्रीयतां ॥ धारा ॥४॥

ॐ वृषभसेनादिगणधरदेवा वः प्रीयतां प्रीयतां ॥धारा॥५॥

ॐ कोष्ठबीजपादानुसारिबुद्धिसंभिन्नश्रोत्रप्रज्ञाश्रवणाश्च वः
प्रीयतां प्रीयतां ॥ धारा ॥६॥

ॐ आमर्षक्ष्वेडजल्लविड्सर्वौषधिऋद्धयश्च वः प्रीयतां
प्रीयतां ॥ धारा ॥७॥

ॐ जलफलजघातन्तुपुष्पश्रेणिपत्राग्निशिखाकाशचारणाश्च वः प्रीयतां प्रीयतां ॥ धारा ॥८॥

ॐ आहाररसवद्क्षीणमहानसालयाश्च वः प्रीयतां प्रीयतां॥ धारा ॥९॥

ॐ उग्रदीप्ततप्तमहाघोरानुपमतपसश्च वः प्रीयतां प्रीयतां॥ धारा ॥ १० ॥

ॐ मनोवाक्कायबलिनश्चवः प्रीयंतां प्रीयतां ॥ धारा ॥११॥

ॐ क्रियाविक्रियाधारिणश्चवः प्रीयतां प्रीयतां ॥धारा॥१२॥

ॐमतिश्रुतावधिमनःपर्ययकेवलज्ञानिनश्च वः प्रीयंतां प्रीयंतां धारा ॥१३॥

ॐ अंगांगबाह्यज्ञानदिवाकराः कुन्दकुन्दाद्यनेकदिगंबरदेवाश्च वः प्रीयंतां प्रीयंतां ॥ धारा ॥१४॥

इह वाऽन्यनगरग्रामदेवतामनुजाः सर्वे गुरुभक्ताः जिनधर्मपरायणा भवंतु ॥ धारा ॥१५॥

दानतपोवीर्यानुष्ठानं नित्यमेवास्तु ॥ धारा ॥१६॥

मातृपितृभ्रातृपुत्रपौत्रकलत्रसुहृत्स्वजनसंबंधिबंधुसहितस्य अमुकस्य * ते धनधान्यैश्वर्यबलद्युतियशः प्रमोदोत्सवाः प्रवर्द्धंतां ॥ धारा ॥१७॥

*इमकी नाम हो यह बोलना

## शांतिधारा ।

तुष्टिरस्तु । पुष्टिरस्तु । वृद्धिरस्तु । कल्याणमस्तु
अविघ्नमस्तु । आयुष्यमस्तु । आरोग्यमस्तु । कर्मसिद्धिरस्तु ।
इष्टसंपत्तिरस्तु । कामपागल्योत्सवा: सन्तु । पापानि शाम्यन्तु ।
घोराणि शाम्यन्तु । पुण्यं वर्द्धतां । धर्मो वर्द्धताम् ।
श्रीर्वर्द्धताम् । कुलं गोत्रं चाभिवर्धताम् । स्वस्ति भद्रं चास्तु ।
क्ष्वीं क्ष्वीं हं सः स्वाहा । श्रीमज्जिनेन्द्रचरणारविंदेष्वा-
नन्दभक्तिः सदास्तु ।

इस प्रकार मंगलकलश से धारा छोड़ते हुए पुण्याहवाचन के
होजाने पर वधू को वर के बायें तरफ करके बैठा देना चाहिए ।

निम्नलिखित मंगलाष्टक बोलना चाहिए ।

श्रीमन्नम्रसुरासुरेन्द्रमुकुटप्रद्योतरत्नप्रभा ।
भास्वत्पादनखेन्दवः प्रवचनाम्भोधीन्दवः स्थायिनः ॥
ये सर्वे जिनसिद्धसूर्यनुगतास्ते पाठकाः साधवः ।
स्तुत्या योगिजनैश्च पंचगुरवः कुर्वन्तु ते मंगलम् ॥१॥
नाभेयादिजिनाधिपास्त्रिभुवनख्याताश्चतुर्विंशतिः ।
श्रीमन्तो भरतेश्वरप्रभृतयो ये चक्रिणो द्वादश ॥
ये विष्णुप्रतिविष्णुलांगलधराः सप्तोत्तरा विंशतिः ।
त्रैलोक्येप्रथितास्त्रिषष्टिपुरुषाः कुर्वन्तु ते मंगलम् ॥२॥
ये पञ्चौषधऋद्धयः श्रुततपोवृद्धिंगताः पञ्च ये ।
ये चाष्टांगमहानिमित्तकुशलाश्चाष्टौवियाश्चारणाः ॥

पञ्चज्ञानधरास्त्रयेऽपि 'विपुला ये बुद्धिऋद्धीश्वराः ।
सप्तैते सकलार्चिता मुनिवराः कुर्वन्तु ते मंगलम् ॥३॥

ज्योतिर्व्यन्तरभावनामरगृहे मेरौ कुलाद्रौ स्थिताः ।
जम्बूशाल्मलिचैत्यशाखिषु तथा वक्षाररूप्याद्रिषु ॥
इक्ष्वाकारगिरौ च कुण्डलनगे द्वीपे च नन्दीश्वरे ।
शैले ये मनुजोत्तरे जिनगृहाः कुर्वन्तु ते मंगलम् ॥४॥

कैलाशे वृषभस्य निर्वृतिमही वीरस्य पावापुरे ।
चम्पायां वसुपूज्यसज्जिनपतेः सम्मेदशैलेऽर्हताम् ॥
शेषाणामपि चोर्जयन्तशिखरे नेमीश्वरस्यार्हतो ।
निर्वाणावनयः प्रसिद्धविभवाः कुर्वन्तु ते मंगलम् ॥५॥

यो गर्भावतरोत्सवो भगवतां जन्माभिषेकोत्सवो ।
यो जातः परिनिष्क्रमेण विभवो यः केवलज्ञानभाक् ॥
यः कैवल्यपुरप्रवेशमहिमा सम्पादितः स्वर्गिभिः ।
कल्याणानि च तानि पञ्च सततं कुर्वन्तु ते मंगलम् ॥६॥

जायन्ते जिनचक्रवर्तिबलभृद्भोगीन्द्रकृष्णादयो ।
धर्मादेव दिगङ्गनाङ्गविलसच्छश्वद्यशश्चन्दनाः ॥
तद्धीनाः नरकादियोनिषु नराः दुःखं सहन्ते ध्रुवम् ।
सस्वर्गापवर्गसुखरमणीयरूपदं कुर्वन्तु ते मंगलम् ॥७॥

सर्पो हारलता भवत्यसिलता सत्पुष्पदामायते ।
सम्पद्येत रसायनं विषमपि प्रीतिं विधत्ते रिपुः ॥

## शांतिधारा ।

तुष्टिरस्तु । पुष्टिरस्तु । वृद्धिरस्तु । कल्याणमस्तु अविघ्नमस्तु । आयुष्यमस्तु । आरोग्यमस्तु । कर्मसिद्धिरस्तु । इष्टसंपत्तिरस्तु । कामयमांगल्योत्सवाः सन्तु । पापानि शाम्यन्तु । घोराणि शाम्यन्तु । पुण्यं वर्द्धतां । धर्मो वर्द्धताम् । श्रीर्वर्द्धताम् । कुलं गोत्रं चाभिवर्धताम् । स्वस्ति भद्रं चास्तु । झ्वीं क्ष्वीं हं सः स्वाहा । श्रीमज्जिनेंद्रचरणारविंदेष्वानन्दभक्तिः सदास्तु ।

इस प्रकार मंगलकलश से धारा छोड़ते हुए पुण्याहवाचन के होजाने पर वधू को वर के बायें तरफ करके बैठा देना चाहिए ।

निम्नलिखित मंगलाष्टक बोलना चाहिए ।

श्रीमन्नम्रसुरासुरेन्द्रमुकुटप्रद्योतरत्नप्रभा ।
भास्वत्पादनखेन्दवः प्रवचनाम्भोधींदवः स्थायिनः ॥
ये सर्वे जिनसिद्धसूर्यनुगतास्ते पाठकाः साधवः ।
स्तुत्या योगिजनैश्च पंचगुरवः कुर्वन्तु ते मंगलम् ॥१॥
नाभेयादिजिनाधिपास्त्रिभुवनख्यातश्चतुर्विंशतिः ।
श्रीमन्तो भरतेश्वरप्रभृतयो ये चक्रिणो द्वादश ॥
ये विष्णुप्रतिविष्णुलांगलधराः सप्तोत्तरा विंशतिः ।
त्रैलोक्येप्रथितास्त्रिषष्टिपुरुषाः कुर्वन्तु ते मंगलम् ॥२॥
ये पञ्चौषधऋद्धयः श्रुततपोवृद्धिंगताः पञ्च ये ।
चाष्टाङ्गमहानिमित्तकुशलाश्चाष्टौविधाश्चारणाः ॥

पञ्चज्ञानधराश्चयेऽपि 'विपुला ये बुद्धिऋद्धीश्वराः ।
सप्तैते सकलाश्चते मुनिवराः कुर्वन्तु ते मंगलम् ॥३॥

ज्योतिर्व्यन्तरभावनामरगृहे मेरौ कुलाद्रौ स्थिताः ।
जम्बूशाल्मलिचैत्यशाखिषु तथा वक्षाररूप्याद्रिषु ॥
इक्ष्वाकारगिरौ च कुण्डलनगे द्वीपेच नन्दीश्वरे ।
शैले ये मनुजोत्तरे जिनगृहाः कुर्वन्तु ते मंगलम् ॥४॥

कैलासे वृषभस्य निर्वृतिमहीवीरस्य पावापुरे ।
चम्पायां वसुपूज्यसज्जिनपतेः सम्मेदशैलेऽर्हताम् ॥
शेषाणामपि चोर्जयन्तशिखरे नेमीश्वरस्यार्हतो ।
निर्वाणावनयः प्रसिद्धमहिताः कुर्वन्तु ते मंगलम् ॥५॥

यो गर्भावतरोत्सवो भगवतां जन्माभिषेकोत्सवो ।
यो जातः परिनिष्क्रमेण विभवो यः केवलज्ञानभाक् ॥
यः कैवल्यपुरप्रवेशमहिमा सम्भावितः स्वर्गिभिः ।
कल्याणानि च तानि पंच सततं कुर्वन्तु ते मंगलम्॥६॥

जायन्ते जिनचक्रवर्तिबलभृद्भोगीन्द्रकृष्णादयो ।
धर्मादेव दिगंगनांगविलसच्छश्वद्यशश्चन्दनाः ॥
तद्धीना' नरकादियोनिषु नराः दुःखं सहन्ते ध्रुवम् ।
सस्वर्गात्सुखरामणीयकपदं कुर्वन्तु ते मंगलम् ॥७॥

सर्पो हारलता भवत्यसिलता सत्पुष्पदामायते ।
सम्पद्येत रसायनं विषमपि प्रीतिं विधत्ते रिपुः ॥

देवा यान्ति वशं प्रसन्नमनसः किंवा बहुब्रूमहे ।
धर्मादेव नभोपि वर्षति नगैः कुर्वंतु ते मंगलम् ॥८॥
इत्थं श्रीजिनमंगलाष्टकमिदं सौभाग्यसंपत्करम् ।
कल्याणेषु महोत्सवेषु सुधियस्तीर्थंकराणांमुखा ॥
ये शृण्वन्ति पठन्ति ते च सुजनाः धर्मार्थकामान्विता ।
लक्ष्मीराश्रयते व्यपायरहिता कुर्वंतु ते मंगलम् ॥९॥

इति मंगलाष्टकम् ।

दीर्घायुरस्तु शुभमस्तु सुकीर्तिरस्तु,
सद्बुद्धिरस्तु धनधान्यसमृद्धिरस्तु ।
आरोग्यमस्तु विजयोऽस्तु महोस्तु पुत्र,-
पौत्रोद्भवोस्तु तव सिद्धिपतिप्रसादात् ॥१॥

## तिलकमंत्र ।

मंगलं भगवान् वीरो मंगलं गौतमोगणी ।
मंगलं कुंदकुन्दाद्यो जैनधर्मोस्तु मंगलम् ॥१॥

## ~~हथलेवा छुडाना~~ ।

~~इसके बाद हथलेवा छुडाने का दस्तूर करके वर और वधू दोनों के हाथ से (विश्वशान्तिहेतुकं इत्यादि कसमाला बोलकर) अर्घ चढ़ावे और पुष्पांजलि क्षेपण करावे~~। तत्पश्चात्

## शान्तिस्तव ।

भगति शांतिविवर्धनमंहसां,
प्रलयमस्तु जिनस्तवनेन मे ।
सुकृतबुद्धिरलं क्षमयायुतो,
जिनवृषो हृदये मम वर्तताम् ॥१॥
चिद्रूपभावमनवद्यमिम त्वदीय,
ध्यायन्ति ये सदुपधिव्यतिहारमुक्तम् ।
नित्य निरञ्जनमनादिमनन्तरूप,
तेषां महांसि भुवनत्रितये लसन्ति ॥२॥
ध्येयस्त्वमेव भवपञ्चतयप्रसार,-
निर्णाशकारणविधौ निपुणत्वयोगात् ।
आत्मप्रकाशकृतलोकतदन्यभाव,-
पर्यायविस्फुरणकृत्परमोऽसि यागी ॥३॥
त्वन्नाममन्त्रधनमुद्धतजन्मजात,-
दुःकर्मदावमभिशम्य शुभांकुराणि ।
व्यापादयत्यतुलभक्तिसमृद्धि भाजि,
स्वामिन्यतोऽसि शुभदः शुभकृत्त्वमेव ॥४॥
त्वत्पादतामरसकोपनिवासमास्ते,
चित्तद्विरेफसुकृतिप्रमयाबुदीश ।

तावच्च सम्सृतिजकिल्विषतापशापः,

स्थान मयि क्षणमपि प्रतिपाति कच्चित् ॥५॥

त्वन्नाममन्त्रमनिशं रसनाग्रवर्ति,

यस्यास्तियोदवदघूर्णननाशहेतु ।

यत्पूरराजिलगणोद्भवकालकूट.,

भीतिर्हि तस्य किमु सनिधिमेतिदेव ॥६॥

तस्मात्त्वमेव शरणं तरणं भवाब्धौ,

शान्तिप्रदः सकलदोषनिवारणेन ॥

जागर्ति शुद्धमनसा स्मरतो यतो मे,

शान्तिः स्वयं करतले रसमाभ्युपैति ॥७॥

पढता हुआ गृहस्थाचार्य शान्त्यर्थ जलधारा छोड़े । पश्चात्—

ॐ ह्रां ह्रीं ह्रूं ह्रौं ह्रः अ सि आ उ सा अर्हत्सिद्धाचार्योपाध्याय साधवः शान्ति पुष्टिं कुरु कुरु स्वाहा ॥

यह मंत्र बोलकर वर और वधू के मस्तक पर पुष्पाजलि क्षेपण करे और इसके बाद—

ॐ ह्रीं अस्मिन विवाहमांगल्यकर्मणि आहूयमानदेवगण. स्व स्थानं गच्छतु अपराधक्षमापनं भवतु ।

इस मन्त्र से विसर्जन करे—जलधारा छोड़े और पुष्पाञ्जलि क्षेपण करे ।

## सासू का आरता करना ।

घर की सासू या सुआसिनी चतुर्मुख दीपक, अक्षत, रोली कलश आदि रखे हुए थाल को हाथ में लेकर जाया-पती का आरता करे और तिलक लगावे ।

## गृहस्थाचार्य का आशीर्वाद ।

इस प्रकार आरता हो चुकने के पश्चात् गृहस्थाचार्य दो पुष्प मालाएँ ( पुष्पों की न हो तो लवगों की ) लेकर निम्नलिखित आशीर्वाद सूचक मन्त्र पढता हुआ वर और वधू दोनों को एक एक पहिना देवे ।

आरोग्यमस्तु चिरमायुरथो शचीव,
शक्रस्य शीतकिरणस्य च रोहिणीव ।
मेघेश्वरस्य च सुलोचनिका यथैषा,
भूयाच्चवेप्सितसुखानुभवोपदाश्री ॥ १ ॥

आयुः पुष्टिं करोतु प्रहरतु दुरितं मगलानि चिनोतु ।
सौभाग्यं वृद्धिमुच्चैर्नयतु वितरताद् वैभवं सचिनोतु ॥
रामापद्मामिरामा रमयतु सुयशः स्पष्टयित्वातनोतु ।
पुत्रं पौत्रं प्रताप प्रथयतु भवतामार्हतीभक्तिरुच्चैः ॥२॥

इसके पीछे—

सुचिरं जीवतादेवो जयतादभिनन्दतात् ।
प्रत्यावृत्य पुनश्चास्मान्रक्षतात्माभिरक्षतात् ॥१॥

यह बोलकर चारों दिशाओं में तथा ऊपर और नीचे भी पुष्प क्षेपण करे।

इसके बाद दुलहा और दुलहिन श्रीजिनमंदिर जी में जाकर अपने डेरे पर जावें।

## विशेष विधान।

विवाहहोमे प्रक्रान्ते कन्या यदि रजस्वला।
त्रिरात्रिं दंपती स्यातां पृथक् शय्यासनाशने ॥ १ ॥
तुर्येऽह्नि स्नापयित्वा तां तस्मिन्नग्नौ यथाविधि।
विवाहहोमे कुर्यातां कन्यादानादिकं तथा ॥ २ ॥

अर्थात् अगर विवाह सम्बन्धी होम का समय निकट होने पर कन्या रजस्वला हो जाय तो वैवाहिक कार्य बंद करके उस दिन से तीन दिन तक वर कन्या को अलग अलग रखना चाहिए चौथे दिन स्नान करा कर समस्त होमादि क्रियाएँ करनी चाहिएँ।

## फेरपाटा की विधि।

यद्यपि फेरपाटा की रीति शास्त्र सम्मत विधि नहीं है, क्योंकि किसी जैन विवाह पद्धति या तद्विषयक अन्य ग्रन्थ में इसका उल्लेख देखने में नहीं आता, परन्तु राजपूताने में इसकी प्रथा है, अतः इस पुस्तक में (~~पृष्ठ संख्या ९२ से~~) लिखी नवदेव पूजा कराकर इस विधि को करना चाहिये।

## अन्य आवश्यक विधियां।

जैन शास्त्रों में अनेक संस्कारों का वर्णन है, परन्तु वर्तमान में उनका प्रचार नहीं है। अतः हमने अन्य संस्कारों के आवश्यक होते हुये भी यहाँ उन्हीं का उल्लेख करना उचित समझा है जो आज कल कराये जाते हैं।